# श्री-कुण्डलिनी-सहस्राधिक-नाम-स्तोत्रम्

हिमालयाभिजन-
श्री-स्वामि-राम-पादुका-
शिष्येण

महा-मण्डलेश्वर
स्वामी वेद भारती
इत्यनेन यथा-दृष्टम्

स्वामि-राम-साधक-ग्रामे
ऋषिकेश-पुर्यां
उत्तराञ्चल-हिमालयेषु

विक्रमीय-हेमलम्ब-नाम-संवत्सरे
२०६१
फाल्गुन-पूर्ण-चन्द्रमसि

ॐ

गुरवे नमः

परमेष्ठि-गुरवे नमः

परम्परा- गुरुभ्यो नमः

हिरण्य-गर्भादारब्धां शेष-व्यासादि-मध्यमाम्
स्वामि-श्री-राम-पादान्तां वन्दे गुरु-परम्पराम्

इमां नः शग्मां प्रथमां जीव-रश्मि
ऋतस्य चेत्रीममृताब्धि- गाधाम्
नि-गूहन्तीं चिद्-गह्वरेष्वात्मानं
पर्वन् पर्वन् स्पन्दमानां सु-मेरोः

सुम्न-प्रेष्ठां धियं-जिन्वानांमदितिं
उग्रां शर्वां द्युम्न-स्तोमं गृणन्तीम्
अ-स्वप्नां धियां सरः सु नः सप्तसु
देवात्म-शक्तिं त्मन् तन्वां ह्वयामसि

नमो वज्रिण्यै ब्रह्म- नाड्यै नमो नमः
नमो वहन्त्यै सु- ष्ठिरायै नमो नमः
नमस्तडिते सु-षुम्णायै नमो नमः
धियस्कम्भायै मन्त्र-नाम्न्यै
सरव्यै बिन्दु-ष्ठायै
नमो नमः

हरिः ॐ तत्सदिति

स्वस्ति श्रीमत्समस्त-सुर-वृन्द-पूजित-पादारविन्द-शिव-प्रतिबिम्बवर्य-श्रीमत्परम-हंस-परिव्राजकाचार्य-पद-वाक्य-प्रमाण-ज्ञ-सांख्य-त्रय-प्रतिपादक-श्रीमत्-शङ्कराचार्यान्वय-करवीर-सिंहासनाधीश्वर-अनन्त-श्री-विभूषित-साक्षाद्-ब्रह्मविद्या-स्वरूप-

श्रीमद्-विद्या-नृसिंह-भारती-
-चरण-कमल-पादुकाभ्य
एतत्
श्री-कुण्डलिनी-सहस्राधिक-नाम-स्तोत्रं
न ममेति भावितं
स्वामि-वेद-भारतीत्यनेन
सप्रणिपातं समर्प्यते
तत् स्वीक्रियतामनुकम्पोदधि-रूपाभिः
श्री-चरण-पादुकाभिः

ऋषिकेशे
स्वामि-राम-साधक-ग्रामे
उत्तराञ्चल-हिमालये

विक्रमीय २०६१
हेमलम्बि-संवत्सरे
फाल्गुन-पूर्णिमा-तिथौ

॥ ॐ ॥ श्रीं ॥ ॐ ॥

१.
अस्ति-नास्ति-प्रान्त-सीमा-सरिन्मध्यस्थ-वीचिषु
अस्ति वा नास्ति वा कश्चिदणिष्ठो वीचिरंशुमान्
२.
तस्य सूक्ष्मतमः केन्द्र-बिन्दुर्द्वीभुवनान्तरम्
प्र-वेष्टुं गगनातीतमेकान्तं ब्रह्म-ख-स्थितम्
३.
कालेऽकाले क्वचित् तत्र यत्र नैव युगायते
न च कल्पायते क्वापि निर्विकल्प-चिति-स्थितेः
४.
अ-नाम-रूपं बिभ्रद्भिर्दिक्-काल-शमनान्त-गैः
तत्राऽनाम्ना ऋषिः कश्चिद् वीचि-बिन्दौ क्षणं विशन्
५.
प्राप लोकोत्तरं लोकालोकैकान्तं तडिद्-वियत्
आत्मभासं च सम्प्राप्य तस्यैव तडितः स्वयम्

६. द्विर्भित्तेः कुट्टिमं च कृत्वा कुटजमाविशत्
तत्रात्म-रतिरात्म-श्रीस्त्यक्त-बुद्धिः समाहितः
७.
आत्माऽऽत्मा रमते चित्-खे सु-खं नापि न चासु-खम्
अथ तत्-पूर्व-सच्चिद्भ्याः कस्मिंश्चिद् भुवने स्थिताः
८.
कस्यां चिदस्ति-सद्-भूम्यामाश्रमेऽहन्धिया श्रिताः
स्वभावार्थमपश्यन्त उद्विग्न-मनसोऽभवन्
९.
तत्र केचित् तद् वि-जहुराश्रमं गुरु-शक्ति-जम्
इतस्ततः प्र-चेरुश्च दिक्-काल-मनसोऽधिया

१०.
एकस्तत्राभवच्छिष्यश्चिदात्म-धृत-बुद्धिमान्
उत्तिष्ठासन्नाम-रूपाकारोदं नाशकत् स्वयम्
११.
तस्मै च ददिवान् नाम स-नामेति हसन् गुरुः
प्र-स्थास्यन् नाम-भूमेः स पूर्वं बिन्दु-प्र-वेशनात्
१२.
स एव शिष्यः सं-स्मारं सं-स्मारं गुरु-मानसम्
गुरौ सं-स्थाप्य चित्तं स्वं सम्प्र-ज्ञात-स्थितिं गतः
१३.
तत्रैव तिष्ठन्नैकाग्र्य-भूम्यां सिद्ध-गुरुं स्मरन्
मौनोद-सरसः कूले चान्तः-कैलाश-सन्निधौ
१४.
गुरु-चक्र-स्थित-प्रज्ञो मौनं ध्यायति गायति
सच्चिद्ध्यार्हं प्रियं मन्त्रं "तस्मै-श्री-गुरवे नमः"
१५.
तस्यैवं स्मरतो नित्यं गुरोः सन्ध्यायतो बलम्
चिच्छ्रोत्रेण गुरुस्तस्य शुश्रावाभ्यर्थितं मुनेः
१६.
शिष्याय तस्मै श्रेष्ठाय स-बलायाधि-कारिणे
नाम-रूपार्थ-दिक्-काल-पाशं छेदयितुं क्षणे
१७.
अभि-ध्यानानु-ग्रहेण समाकृष्य स्व-तेजसा
तस्य चेतः प्रति-ष्ठाप्य स्व-कुटीरे तडित्-कृते
१८.
उवाच तं मौन-गिरा प्र-भा-स्पन्द-स्व-रूपया
यत् त्वं चित्त-प्रसादेन चेश्वर-प्र-णि-धानतः
१९.
तीव्र-सं-वेगः स्व-गुरौ नित्यमर्पित-चेतसा
आकारयसि मां नित्यं नमस्कृत्य पुनः पुनः

१०.
तदहन्त्वां सभाकृष्यानिनायैतदनाश्रमम्
स्व-रूपं चिन्मयाऽऽकाश-शक्ति-धारा-प्र-भास्वरम्
११.
हन्त ते कथयिष्यामि यत् स्याज्जिज्ञासितं तव
वारयामि च सन्देहान् पृच्छ पृच्छाच्छ-मानसः
१२.
स-नामा नाम शिष्यः स दृष्ट्वात्मानं सभागतम्
प्रोवाच वि-स्मित-मना अ-पारस्त्वदनु-ग्रहः
१३.
त्वामेवं प्रति-पृच्छामि प्र-णि-पत्य पुनः पुनः
सम्प्र-ज्ञाताद् धर्म-मेघं मुमुक्षुः कथमाप्नुयात्
१४.
असम्प्र-ज्ञातं-कैवल्यं त्वादृग्-लभ्यं कथं लभे
एतच्छ्रुत्वा स आचार्यो स्वनामा श्रुति-मूर्तिमान्
१५.
स्व-चिदावेश्य तद्-बुद्धौ प्रैरतेदं वचोऽवचः
येयं शक्तिः कुण्डलिनी विराडात्मा त्वयि स्थिता
१६.
बिस-तन्तु-निभामेतां विद्युदात्मां समाश्रय
भूरि-वर्णोज्ज्वलद्-धारां रश्मि-रेखा-स्वरूपिणीम्
१७.
सहस्र-नाम्न्यामेतस्यां मन्त्रैकाग्र-धिया यदा
श्वासानु-श्वास-पथिभिः प्रारोहस्यव-रोहसि
१८.
ततः सा योग-निःश्रेणी त्वरयाप्य-वि-कम्पया
मादृग्-लभ्ये चित्-कुटीरे नित्यं स्थातुं स्थिरं लभेत
१९.
सनामोवाच रोहामि योग-पन्थानमादरात्
सहस्र-नाम्नीं यां देवीं श्री-भवानाह-शाश्वतीम्

२०. कानि तस्याः स्व-नामानि सहस्राङ्क-मितान्यहो
एवं पृष्टः स-नाम्ना सो ऽनामा चैतन्य-मात्रकः

२१. आचार्यः प्राह सच्छिष्यं यथा-साक्षाद् वदामि ते
नाम्नां तत्त्वं कुण्डलिन्या मननादेव गम्यते

२२. तत ऊर्ध्वं नि-दिध्यासात् शक्ति-पातात् तदुत्तरम्
यथाश्च पिण्ड-स्थां योगी पश्येत् तडिद्वराम्

२३. तथाश्च विराडात्म-रहस्यं वेत्ति तत्त्वतः
सर्वा विद्याः कलाः सर्वास्तस्य स्युः शक्ति-योगिनः

२४. जयेच्छक्ति-त्रयं साक्षात् सर्वाः शक्ती रहः-स्थिताः
गुह्यमर्थन्तदा नाम्नां वेत्ति योगी सहस्रशः

२५. अथ ते सम्प्र-वक्ष्यामि तत्सहस्राधिकाभिधाः
क्षणस्यार्बुद-भागेन आ-रश्मिं प्र-क्षिपामि ते

२६. तत्-क्षणांशेन तज्ज्ञानं धियि ते सम्प्र-वेक्ष्यति
तत एव समास्थायात्म-शक्तिं द्यु-कुण्डलीम्

२७. अ-सम्प्र-ज्ञात-योगेन स्वाऽऽत्माऽऽत्मस्थो भविष्यसि
तद् विद्धि नाम कैवल्यं निर्वाणं मोक्षमेव वा

२८. कुण्डलिनी तदैषा स्यात् स्वात्मा ते त्वं च चित्-तडित्
यथा यथा तु प्रत्येकं नाम वच्मि तथा तथा

२९. तद् रहस्यं विराडण्डे तथा द्रक्ष्यसि चात्मनि
एतत् पदं समारुह्य ततो ब्रह्मणि लीयसे

३०.
ततश्चिक्षेप चिच्छक्तिं शुभ्रां शिष्य-चितौ गुरुः
तस्याभावेष्ट्च नामानि पश्यन्तीत्याख्यया गिरा

३१.
क्षणस्यार्बुद-भागेन प्रातिभानि च तच्चितौ
प्रादुर्बभूवुः सहजं स-रहस्यानि तत्त्वशः

३२.
आ-चक्र-मूला-ब्रह्माण्डं साक्षात् पूर्णं ददर्श सः
पश्यन्त्या मध्यमां वाचं क्रमशः सोऽव-रोहयन्

३३.
यथा जगाद शिष्येभ्यो मानसेभ्यश्च ते तथा
सहस्राधिक-नामाख्यं ददुः स्तोत्रं जनौ जनौ

३४.
तत् परम्परया दत्तं स्फुरदस्मच्चितौ क्षणे
दीयतेऽत्र मुमुक्षुभ्यो ह्यनु-कम्पा-प्र-पूरितम् ॥

॥ॐ॥

अथ

॥ कुण्डलिनी- सहस्राधिक-नाम-स्तोत्रम् ॥

॥ श्रीं ऐं ह्रीं क्लीं क्रौं श्रौं ॥

१. तच्छब्दार्था त्वम्पदार्था अस्यर्था ऽहम्पद प्रथा
आत्मात्मा चास्मि-बोध्या च प्रज्ञान-ब्रह्म-सार्थता

२. पूर्णाहन्ता चास्ति-बोध्या चेदन्ता ऽहं-स्वरूपिणी
सिद्धि-दात्री ब्रह्म-रात्रिरहम्भाव-निषेधिनी

३. अहम्ब्रह्म-महावाक्य-चिन्ता-चित्त-प्रपूरणी
अहम्ब्रह्मातिरिक्तार्थ-चिन्तन-प्रविरेचनी

४. अहम्ब्रह्म-महास्थान-रस-पूर्ण-सुकुम्भिका
अनन्त-शक्ति-निष्यन्दा अनन्त-स्पन्दन-स्व-भूः

५. प्रत्ययैक-प्रवाहस्थ-ध्यान-स्थिति-सुधा-सरित्
ज्योतीरथा ऽहि-माया-च बुध्न्या बोधि-वट-प्रथा

६. ऊर्ध्व-मूला ऽप्यधः शाखा अश्वत्था सृष्टि-कोविदा
अश्वत्थ-पत्र-निलया चाश्वत्थ-विलयार्थिनी

७. जीवन्ती जीवनी जीवा जीव-शक्ति-महासना
ब्रह्माण्ड-सुविराट्-प्राण-सहजायाम-धारिणी

८. ब्रह्माण्ड-नाद-वर्गात्म-प्रत्याहार-स्थिरङ्कुरी
परमाणु-महत्त्वान्त-धारणा-धरणी-धरी

९. सविचारा निर्विचारा धर्ममेघान्त-संस्थितिः
सविकल्पा निर्विकल्पा तुरीया चाप्यनुत्तरा

१० अन्नमयी प्राणमयी मनो-विज्ञान-कोषिणी
आनन्दमयकोषस्था त्रिषप्ताकृति-बिभ्रती

११. स्वच्छात्म- स्फटिकादर्श- प्रतिबिम्ब- विसर्ग- द्यौः
प्रतिबिम्बित- विश्वाण्ड- परामर्श- विमर्श- भूः

१२. प्रतिवस्तु- प्रतिप्राणि- स्वांश- शक्त्यवतारिणी
षोडशी पूर्णिमा- तत्त्व- कला- तत्त्वबोधिनी

१३. विष्णुरूपा विष्णुप्रस्था भूयोभूमा तुविप्रथा
वैश्वानरी वासुदेवी चेशावास्या सुवासिनी

१४. ख- मेरु- दण्ड- गमना मेरू- दण्ड- पिपीलिका
कोटि- ध्रुव- महाचक्र- मण्डल- भ्रमण- स्व- धूः

१५. सर्वाङ्मर्थ- सद्रूपा ऽक्षराक्षयिणी स्वयम्
अहं- विस्मारिणी चाहं- साक्षात्कार- वर- प्रदा

१६. परस्पर- विरुद्धार्थ- समाधान- लयङ्करी
ब्रह्मर्षित्व- प्रदात्री चाप्युपसर्ग- विसर्जनी

१७. स्वात्म- बिम्ब- समालम्ब- स्वात्मादर्श- विचूर्णिनी
स्व- चित्त- भित्ति- चित्रस्थ- स्वज्योतिर्दीप- चित्रिणी

१८. विचित्रा चित्र- करणी चित्रा चित्र- श्रवस्तमा
सर्वेन्द्रिय- सुख- स्फूर्त्तिर्विषयान्तः प्रवाहिणी

१९ भोगि- भोग्य- स्व- सम्बन्ध- मध्यवर्त्ति- सुश्रृंखला
अन्तर्मुखी बहिर्वक्त्रा पराची प्राग्दिशाश्रिता

२० सुसंवादि- विसंवादि- राग- सुमन- सुवाटिका
आधारादि- सहस्रान्त- महापद्म- सुमालिका

२१. समस्त-पश्चात्ताप-शीतलीकरणोदधिः
प्रायश्चित्तिः सर्वतीर्थ-सरित्स्नान-फल-प्रदा
२२. पूजा-कर्म-तपो-होम-ध्यानासन-निषेदुषी
हृष्यर्था च हृषीकेशी तरणिस्तारिका तरिः
२३. ऊर्ध्व-सर्प-सटा विष्णोः शेष-शय्या लयान्तगा
शिवाङ्ग-भूषा-नागेशी चोत्सर्पिण्यवसर्पिणी
२४. सर्व-विद्या-व्याकरणी सन्ध्या-भाषा-स्वरूपिणी
समस्त-भाषा-शृङ्गारा साद्यन्त-लिपि-रूपिणी
२५. सुषुम्ना-स्वर-वासो-घाः वास्तु-नारी-शरीरिणी
सुवासना सर्व-वीरुत्सुम्नान्तः-प्रवहत्सरित्
२६. चक्रवर्त्ति-महासेना-मल्लादि-बल-दायिनी
देवारि-सैन्याधिपति-क्षत्र-दर्प-प्रधर्षिणी
२७. श्रवणी मननी नित्य-ब्रह्म-दिध्यासिनी निजा
निजाध्यक्षा निजानन्दा साक्षात्कार-स्वरूपिणी
२८. स्वान्तर्लीन-महाज्वाला दर्पि-दर्प-विदाहिनी
अक्ष-मालाऽक्ष-रा नित्याक्षरिणी क्षरणान्तगा
२९. पौरुषी पुरुषाकारा पुं-रूप-व्योम-काशिनी
पुंशक्तिश्च महावीर्या ऊर्ध्व-रेतस ईश्वरी
३०. ऊर्ध्वरेताः स्वयं देवी सर्वेषामूर्ध्व-रेतसाम्
ऊर्ध्व-लिङ्ग सप्तकेशी सप्त-स्तन्य-सरस्वती

३१. सर्वा सैवाप्यसर्वा-च सर्वासर्वा स्व-सर्ग-गा
अ-सर्वासर्व-कोट्यन्ता सर्वासर्व- लयङ्करी

३२. सर्व-नाम्नी सर्व-धाम्नी सर्वनामाऽविभक्तभाः
सर्व- प्राणि- सुखाराम-महारास-मधु-प्रिया

३३. पुँल्लिङ्गिनी महालिङ्गा लिङ्ग-ब्रह्माण्ड-भामिनी
लिङ्ग-देह-समष्ट्यात्मा सूक्ष्मलिङ्गमयी शिवा

३४. इन्द्रियान्तः परिष्पन्दत्सुख-हर्ष-चमत्कृता
प्रेमि-द्वय-करामर्श-चुम्बनाल्लिङ्गिनी स्वयम्

३५. समस्तदेव-पूजार्घ्य-प्रसादान्तः- सुगूहिता
अध-ऊर्ध्व-परिष्पन्दा ऊर्ध्वज्योतिः शिखामयी

३६. ऊर्ध्व-रेखा-चोर्ध्व-दृष्टिः कृपाऽधोलोकिते श्वरी
सर्व-काम- प्रशमनी क्वचो-लोकोद्धृतोर्ग् मही

३७. यत्र-काम-प्रसन्नाच कामि-चित्त-प्रमाथिनी
कामेन्द्रिय-परिष्पन्द-चिह्ना निष्कामिता-पुरी

३८. गिरि-स्तनी सरित्स्तन्या आत्म-भक्त-वशंवहा
व्यञ्जन-व्यञ्जन-स्वार-श्वास-प्रेरण-तत्परा

३९. स्मित-प्रज्ञा महाशुक्ला नीप-कान्तार-वासिनी
सप्त-प्रज्ञा सप्त-भूमिः सर्व-भूमिर्निरीश्वरा

४०. सहस्राक्षी सहस्रांशुः सहस्र-चरणान्विता
सहस्रशीर्ष-मन्त्रात्म-स्पन्द-मादन-सम्पदा

४१. अनन्त-कोटि-ब्रह्माण्डाग्रान-दन्त-सहस्रिणी
अनन्त-ज्वलन-ज्वाला-केश-रश्मि-चमू-सृतिः

४२. अनन्त-सूर्य-गर्भान्तर्ज्वाला-ताण्डव-नर्त्तिनी
तत्तद्रवि-करास्याभा-मण्डलस्थ-मुनि-स्तुता

४३. वज्राश्म-घन-दुर्दान्त-क्लेश-ध्वान्त-निशातन-
महाध्वंस-पटु-ज्ञान-निशित-क्षुर-धारिका

४४. क्षणार्ध-शत-भागस्थ-कोट्यंश-परिणामन-
दक्षा-क्ष-कक्षा-चरणाण्वन्तश्चिल्लास-नर्त्तिनी

४५. भूतिर्विभूतिः सम्भूतिः प्रभूतिः प्रभुतेश्वरी
विभुभूषा-भूषणेशी चान्त्ङ्गेत्तर-विक्रमा

४६. अविनाश्या बिन्दु-भेद्या चाभेद्या बिन्दु-भेदिनी
द्वया द्वयैक्य-वाक्यार्था सर्व-तत्त्वार्थ-सूत्रिणी

४७. मन्त्र-स्पन्दा महास्पन्द-महानादान्त-मन्त्रिणी
ज्योतिरन्त-महामन्त्र-स्पन्दनैक-स्वरूपिणी

४८. ध्यान-सूत्रात्मिका ध्येय-ध्यातृ-ध्यान-लयात्मिका
ऊर्ध्वाधः पार्श्व-साम्मुख्य-पृष्ठ-तिर्यङ्-निलापनी

४९. सर्व-देश-विभागघ्नी दिग्विभाग-विनाशनी
विभुभूषा-निरोधान्ता विलयेच्छाऽस्त्र-धारिणी

५०. मातृ-मेय-प्रमाणार्थ-वाद-पाश-विस्रंसन-
पटु-मौन-प्रतिष्ठान-कोविदा मूक-सुन्दरी

५१. ब्रह्मास्वादैक-रसना शिव-चूडा-समाश्रिता
श्वास-प्रश्वास-रशना ब्रह्माण्ड-श्वास-रूपिणी

५२. सर्व-गर्त्त-महासाम्य-करणी सम्प्रवर्त्तिनी
अस्ति-भाति-प्रियाकार-नाम-रूप-विवर्त्तिनी

५३. समस्त-सूर्य-लोकादि-मुण्ड-गोल-सहस्रिका-
महामाल्य-स्वकीयात्म-महेशान-जपात्मिका

५४. जीवाभ्यन्तर-कामेश-प्रेरिताश्लेष-लक्षण-
सम्भोगैक्यज-सम्भाव-स्त्रैण-पौंस्य-लयात्मिका

५५. कौक्ष्यर्बुदान्त-युगपच्चुम्बनाश्लेषणात्मक-
विबुभूषा-सम्बुभूषा-प्रबुभुक्षा-स्वलक्षणा

५६. सहस्र-तान्तवी वीणा वाणी कोट्यन्त-तान्तवी
योगि-सिद्ध-विनैष्कर्म्या दैवी कर्म-विपाक-दा

५७. सूत्रा सूत्रकरी विश्व-माला-सूत्रण-तत्परा
स्वान्तःप्रोत-प्रजा-सूत्रा सर्व-सूत्रार्थ-सारिणी

५८. मन्त्रा मन्त्र-करी विश्व-मनो-मन्त्रण-तत्परा
मन्त्रेश्वरी महामन्त्र-चिच्चिन्ता-प्रेरणात्मिका

५९. नामधेयमयी नष्ट-नामा किं-किं-स्वरूपिणी
सुरूपा सर्व-रूपा च नाम-रूप-निशातनी

६०. स्त्री-वपुः स्फुर-पुं-शक्तिः पुंस्यन्तः-स्त्रीत्व-धारिणी
स्त्री-पुं-रूपा चाद्वयेशी स्त्री-पुं-भेद-विनाशिनी

६१. नित्य-कर्म-करी स्थूल-सूक्ष्म-कर्म-प्रसाधनी
कर्मान्तःस्थिर-नैष्कर्म्या ऽकर्मान्तर्वर्त्ति-कर्म-धा

६२. आचार-परम्पाचार्या ऋष्याचार्य-पद-प्रदा
मन्त्रवाटाश्रमाराम-तरु-पङ्क्ति-हरीतिमा

६३. सहजानन्द-निष्यन्दा सौन्दर्य-सुख-दामिनी
गगनानन्द-मोदाढ्या रति-कन्दर्प-सुन्दरी

६४. अन्य-देव-परित्याग-पुण्य-पूजा-फल-प्रदा
सर्व-देव-समावेश-यज्ञाहुति-फलेश्वरी

६५. ह्यः-श्वोऽद्यादि-कालांश-सूक्ष्मार्थ-पद-भामिनी
अश्वत्थ-सर्जन-पटुः श्वःश्वो-नव्या सनातनी

६६. अकारादि-विसर्गान्ता मौनानुस्वार-वन्दिता
स्वर-स्वाधीन-वनिता ऽथा ज्झल्सन्धि-संयुता

६७. हलन्तः-स्वर-जीवेशी निर्जीवाक्षर-जीवनी
उमर्बन्तः-स्व-निलया उमर्बन्तर्निनादिनी

६८. कालेशोपस्थ-निलय-नित्याश्लेष-विनर्त्तिनी
रिक्त-नाम्नी महा-नाम्नी नाम-बीज-नमस्क्रिया

६९. भाविनी भाषिणी भाषा भद्रा भाग्यलता स्व-भूः
विभ्वी प्रभ्वी महाभूत-सूक्ष्म-भूत-प्रमाथिनी

७०. षट्त्रिंशत्-तत्त्व-यमनी कला षोडश-रूपिणी
आ-षोडश-कलाऽऽयामा कलाऽऽयाम-निरोधिनी

७१. मानसाख्य- सरः पद्म- सिंहासन- विराजिता
मनो-वेश्म- समासीना प्राण-वेश्म-निवासिनी

७२. ध्यान- मूर्त्तिर्ध्यान-लीना ध्येया सन्ध्यान-चक्रिणी
ध्यान- रतिर्ध्यानि-रक्ता ध्यान-रिक्ता ख-वर्णिनी

७३. रिक्त-चित्ता निर्मनस्का निष्प्राणा प्राण- भूमिका
प्राण-ज्योतिः प्राण-रतिरायुष्प्राण- प्रदायिनी

७४. विरागा चित्र-रागा च प्रथमा मध्यमोत्तमा
वरदाऽभृतदा दारा समस्त-विश्व- दारणी

७५. तनू- रथा मन्त्र-रथा स्वच्छ- स्फटिक- मौकुरी
तथागता तनु- प्राणा स्वर्माध्वी द्यौर्मधूत्करा

७६. मन्त्रोद्भवा मन्त्र-विद्या मन्त्र-लीना च धारणी
मन्त्रार्थ- साक्षात्कार- स्रोतो-लिङ्गाऽथ्य मन्त्रका

७७. मन्त्र-योनिस्तन्त्र-विद्या महाचक्र-युतिर्धुरा
सर्व-चक्र-धुरीणा द्या चक्र-माता सुचक्रिणी

७८. अति- सौवर्ण- दीप्तिः सा भक्त-याचित- दायिनी
वि-शोका शोक-शमनी स्थिर-प्रज्ञा ऋतम्भरा

७९. ऋतु-चक्र- समारूढा ऋतु-चक्र- प्रवर्त्तिनी
आर्त्तव- स्रोतः-सुमना ऋतु- काल- समागमा

८०. ऋतु-पुष्पाम्बर- धरा ऋतु-काल- प्रबोधिनी
प्रातः-सन्ध्या- हृदावासा सायं- सन्ध्या- प्रपूरणी

८१. प्रत्याहृतैकाग्र-चित्ता धारणाऽऽधार-संस्थितिः
ध्यान-धारा-प्रवाह-स्था प्रत्यये साम्य-संस्थितिः
८२. समापत्तिर्निर्वितर्का निर्विचारा निरोध-भूः
सर्व-व्युत्थान-संस्कार-वृत्ति-चक्र-निरोधिनी
८३. विपर्यय-क्लेश-हन्त्री चित्त-स्थिति-निबन्धनी
अभ्यास-रूपा वैराग्य-सारा चित्त-प्रसादिनी
८४. मैत्री च करुणोपेक्षा मुदिताऽऽमोद-वर्धिनी
भाव-शुद्धि-तपो-रूपा प्रतिपक्ष-विभावना
८५. खेचरी भूचरी ख-स्था ख-स्वरूपा न-खाकृतिः
सर्वाशा सर्व-रोकेशी दिक्चरी भू-पुरेश्वरी
८६. नाभ-ज्वाला लेलिहाना नाद-सप्त-शिखा-युता
सप्त-विंशति-नक्षत्र-चतुष्पाद-कलामयी
८७. मेषिणी वृषिणी मीनेत्यादि-राशि-नियामिनी
चित्रा विशाखा ज्येष्ठादि-सुविचित्रित-वत्सरा
८८. दिक्-काल-कार्य-प्रभृति-स्व-प्रजा-कुल-वत्सला
कुलीना कौल-वनिता मधु-मिश्र-तपोमयी
८९. सन्ध्या-भावा सु-सन्धाना समयाचार-तत्परा
जप्या जल्पि-जनालभ्या जप-माला-वि-भूषणा
९०. गुरु-मेरु-महाबीजा जप-माला-स्वरूपिणी
चन्द्रिका-शत-शीताभो-वर्षणी सु-वि-चर्षणा

९१. राज्य-श्री राज-मार्त्तण्डा यम-राज-नियामिनी
मृत्युघ्नी मृत्यु-हरणी मारारिः प्रति-पक्षिणी

९२. सुषमा-सम-रूपा च सम-प्राणा समेन्द्रिया
सम-श्वासा सम-गतिः समचित्ता समर्थता

९३. सम-मेरुः साम्य-रसा निर्विषमा वैषम्य-दा
सम-धातुः साम्य-शक्तिः सम-काया समन्तता

९४. एकैकात्म-सु-वि-ज्ञाना सर्व-प्राणि-मनो-रथा
विज्ञप्ति-मात्रता-द्रष्टा अनुच्छेदा ऽप्यशाश्वती

९५. अनेकार्था ऽप्यनानार्था अनागता ऽविनिर्गता
सर्वाङ्क-कलना रेखा बिन्दु-रूपा त्रि-कोण-गा

९६. वर्तुला वलयाकारा शून्या शून्य-नि-षेधिनी
चतुरस्रा ऽथाङ्क-विद्या बीजाङ्क-नय-गामिनी

९७. सुशेवा साम्य-सुमना ज्या-मितिर्लिङ्ग-रूपिणी
वियत् सूर्यमती साक्षाज्ज्योत्स्ना चार्वेन्दु-रूपिणी

९८. अन्तर्भौम्यग्निरूपा भू-गर्भ-दावानल-द्रवा
मण्यन्तर्ज्योतिराभासा सुवर्ण-रजत-प्रभा

९९. कुण्डाग्निश्चैव होमाग्निः पाकाग्निश्च चितानला
सर्व-नक्षत्र-भासाग्निर्विद्युन्मेघ-नि-वासिनी

१००. अनन्त-कोटि-सूर्यान्तर्गर्भ-वेश्म-वि-हारिणी
अनन्त-कोटि-चन्द्रेशी चन्द्रा चन्द्र-कला स्वयम्

१०१. यज्ञान्तर्मन्त्र- सन्तान- प्रोच्चार- स्वर- मोहिनी
यज्ञ-कुण्ड- महा- ज्वाला- शिखा- सप्त-स्वरूपिणी

१०२. यज्ञ-वाट- समाकीर्ण- प्र-सहस्र- स्फुलिङ्गिका
तरु- प्र-तान- सुमनः-स्तम्ब- सोम-रस-प्रधिः

१०३. आ- मूल- शाखा- पत्रान्त- वनस्पत्योषधि- स्रवद्-
रसारोह- समारोह- व्याज- स्पन्द- तडित्- तनूः

१०४. महा- मन्त्रेश्वरी मन्त्र-प्रेरणा मन्त्राध्व-गा
मुक्तात्म-ज्ञान- साम्राज्ञी मुक्ति- धामैक-वासिनी

१०५. एक-वस्त्रा कुसुमिता पुष्पिणी च रजस्वला
आर्त्तवी चैन्दवी गम्या लेखा विध्यद्बिन्दु- प्रभास्वरा

१०६. रक्ता च हरिता पीता नीला धूम्रा च गैरिकी
शुभ्र-श्वेतोज्ज्वला सर्व- वर्णैक- प्रभवा प्रभा

१०७. सर्वाभय- महालास्या भय- ब्रह्माण्ड- ताण्डवी
महा- व्याहृति- स्वनाराध्या चाद्या निद्रा मनोन्मनी

१०८. विषु-रूपा शची सूर्या स्वर्देवी सोम- पायिनी
श्रवस्यूः सुम्नयूर्नाभि-कुण्ड-वेदी मणि-प्रभा

१०९. मघोनी सत्य-श्रवसी सुजाता च दिवित्मती
सुनीथा गोमती साध्वी शून्याकाश-विभावरी

११०. ऋतावरी बोधयन्ती विश्व-वारा तडिद्रथा
गिरि-सानु-स्थिताऽत्रिवी सोम- धारा धियावसूः

१११. सप्त-स्वसा त्रि-षध-स्था हव्यस्था वाजिनीवती
हव्या सु-जुष्टा सुषुम्ना माया-हन्त्री स्व-पप्रुषी

११२. भव्या भाव्या भवेशानी भूति-राज्ञी विभावसुः
भवौषधिर्विभूत्यन्ता मृत्य-मृत्यु-नि-वारणी

११३. भयौषधिर्भय-परन्दा सु-हास्य-मधु-वर्षिणी
माध्वी मृद्वी च परुषा वर्षिष्ठा युवतिः शिशुः

११४. सफला निष्फला भाल-भ्रू-मध्य-गृह-वासिनी
भूतिः पूर्त्तिर्महाऽऽवेशा सु-वेशाभरणान्विता

११५. स्व-राज्ञी च वि-राज्ञी च सु-स्मितामृत-वर्षिणी
अन्तर्लोकासनारामा बहिर्लौकिजन-प्र-सूः

११६. स्वर्गाङ्गा ब्रह्म-रन्ध्रान्तः-सरोवर-सरोजिनी
रूप-राज्ञी नाम-शक्तिर्नाम-रूप-वि-लासिनी

११७. शब्द-शक्तिः शास्त्रार्था शास्त्रार्थ-जय-दायिनी
स्थिरा स्थेष्ठा सुषोमा च सदसस्पत्य-भाविनी

११८. सीमन्तिनी सु-भाग्या च समस्त-स्त्री-स्व-रूपिणी
गर्भ-दात्री गर्भ-धात्री स्त्रीणां दोहद-कारिणी

११९. स्तन्य-धारा पयो-वर्षा स्त्री-स्तन्य-परि-पूरणी
सु-स्वच्छ-स्फटिक-प्र-ख्य-चैतन्य-कलशात्मिका

१२०. स्वसा च दुहिता जाया जननी सुन्दरी वधूः
चैतन्य-धारा प्रेक्षात्मा निगमागम-वर्षिणी

१२१.
संस्कार-क्षेत्र-जननी वासना वासना-रिपु:
संस्कार-शक्ति-क्षयिणी वृत्तिज्ञा प्रत्ययात्मिका
१२२.
अमृतोत्सा ऽमृत-फला मृत्योरपि भयङ्करी
अमर्त्या मृत्यु-क्षयिणी मृत्यु-राज्यभयङ्करी
१२३.
सर्व-मन्त्र-धरी धीशा मन्त्र-प्रेरण-धर्मिणी
मन्त्र-प्रिया मन्त्र-धरी मन्त्र-जाप-परायणा
१२४.
जापकान्तर्मनश्चेतो-धी-स्पन्द-जप-जागृति:
उद्वेग-शमनी शान्ता उद्विग्नोद्वेग-शक्ति-धा
१२५.
उत्तेजिनी शम्भाश्लेषा रुद्राश्लेष-वि-मर्शिनी
शिवाश्लेष-परामृष्टा शिवाश्लेष-महालया
१२६.
पौरुषी पुरुषाधारा पुं-शक्ति: कलना-कला
लिङ्गेशी लिङ्ग-राज्ञी च लिङ्ग-भेद-नि-वारिणी
१२७.
वाद-तर्क-सु-वाक्सिद्धिर्विद्यात्मा च नि-बोधिनी
सु-धर्मा धर्म-रहिता सु-धर्म-पथ-देशिनी
१२८.
देशिकी देशिकेन्द्रेशी प्रज्ञेशी च वि-शेषिणी
समाधि-दशकेशी सा समाधि-रस-भू: स्वयम्
१२९.
स-विकल्पा निर्विकल्पा सम्प्रज्ञात-समाधि-गा
अ-सम्प्रज्ञात-शून्यत्वा चित्तान्त-लय-कारिणी
१३०.
चित्त-क्षय-करी चेतश्चिन्ता-वृत्ति-नि-वारिणी
संवृता वि-वृता वार्त्ता वृद्धि-क्षय-नि-रोधिनी

१३१.
सप्त-धातुः काम-धातुर्नाम-धात्वर्थ-बोधिनी
भाव-षट्क-विकारार्था भाव-षट्क-वि-लापिनी

१३२.
शम्पा शान्ततमाऽघोरा सत्या सत्यानृतात्मिका
महा-सारवती सारा सरीसृपवती सरित्

१३३.
सांख्या सखी सुखासीना सरो-रुह-सृतिः स्मृतिः
सरो-रुह-प्रिया प्रीतिः सुखासना सना-प्रिया

१३४.
तपस्वती तपो-धात्री तपो-दात्री तपस्विनी
तपोमयी तपस्त्रात्री सा तपस्वि-प्रिया सनिः

१३५.
उषाः सन्ध्या सदाभासा सदाच्छाया रवि-प्रिया
गायिका रसना नेत्री सर्वेन्द्रिय-रसास्थिता

१३६.
श्वासार्जिता श्वास-देहा श्वासार्चा श्वसन-प्रिया
विश्वास्याऽपान-शमनी ब्रह्माण्ड-प्राण-चारिणी

१३७.
अदितिर्धर्म-रूपा भ्राट् भ्रात्री भर्त्री भृतिर्भरा
निर्भरा निर्भरा नौडा स्रोतस्वती सरो-रुहा

१३८.
अहन्त्वं स च सा-चासौ साहं सोऽहमयन्त्वियम्
इदमेतच्चैष एषा सर्व-नामार्थ-भूः स्वयम्

१३९.
शाक्या भाव्या भाव-भाषा नवधा-रस-वर्त्तिनी
प्रथमाऽन्त्या सुवर्णा च वर्णिनी प्रथमा च गौः

१४०.
स्वयं-सौभाग्य-संयुक्ता स्व-पत्नी चाप्यभर्तृका
धारणा धारणी धैर्या भावना धिषणा च धीः

१४१.
ज्योत्स्ना रश्मी रसादाना रसदा च रसाभिधा
मधु-स्तन्या स्तन्य-साम्नी वात्सल्यामृत-संस्रवा
१४२.
प्रत्ना माध्वी तडिद्वीरा वियद्रसा पुरु-ष्टुतिः
शतोतिश्च सहस्रोतिर्मन्म-रिक्था सु-वाग्रसा
१४३.
दिवां माता चन्द्र-रथा मध्यन्तर्वेश्म-वासिनी
चेतो-घृत-जुहूर्योषा भ्राजज्जन्मा मख-त्विषी
१४४.
भ्राजदृष्टी रुद्र-सूनूरर्किणाभिष्टि-दाशुषी
हिरण्याक्षी स्वर्ण-गर्भा तुवि-शुष्मा तुवि-ष्टुतिः
१४५.
महि-व्रता देव-वीतिः स्वर्वीथिर्मधुमत्तमा
सोम-धात्री भूरि-धारा विभु-नाडी वि-दाशुषी
१४६.
प्राण-स्कम्भा सत्य-दोग्ध्री ज्योतिर्दोग्ध्री तनू-त्यजा
जीव-वामा महा-वीर्या सुम्नान्तः-प्र-वहत्सरित्
१४७.
पूर्वी रुक्मा ऽर्जुनी कृष्णा रोचिश्चित्र-श्रवस्तमा
वैश्वानरी विश्व-वारा चित्र-भानुर्विवस्वती
१४८.
देवयन्ती च हव्योही सुख-वापी सु-सन्दृशा
मनुष्वती सुषणना चेतोऽन्तर्मधु-दाशुषी
१४९.
प्रेङ्खा प्रेक्षा व्रत-योक्त्री दिवि-स्पृक् सप्त-सं-क्षितिः
मेर्वन्तः-प्र-स्फुरद्रश्मिः शाक्ती शैवी च वैष्णवी
१५०.
सौरी चैन्द्री गाणपत्या अ-वि-तन्द्रा रजीयसी
ज्योतिश्चक्रा वासु-धानी प्रिय-मेधा पुरु-वसुः

१५१.
सूर्य-रोचिश्चेन्दु-रोचिरुरु-गाया सु-मेधुरा
ऋतोर्मिर्ऋत-सिन्धुश्च शोचिषी शुचि-बुद्बुदा

१५२.
मदिरा मन्दिरारूढा मण्डलान्तः-प्र-चारिणी
स्थूणा-चञ्चत्पदाऽच्छिद्रा छिद्र-चाञ्चल्य-हारिणी

१५३.
मधु-वृष्टिर्मधूत्सृष्टा चित्राभा चित्र-यज्ञिया
अ-सं-हित-सु-सन्धाना समाधान-विधि-प्रिया

१५४.
सन्धि-वि-ग्रह-राज्ञी सा वि-ग्रहान्त-विवेकिनी
मधु-दृष्टिर्मधु-स्फीता मधु-चक्षुः-कटाक्षिणी

१५५.
वि-चित्र-कबरी-भाराभ्यन्तर्गूढ-मणि-प्रभ-
सहस्र-कोटि-ब्रह्माण्ड-शिरो-भूषण-धारिणी

१५६.
सहस्र-कोटि-ब्रह्माण्ड-शङ्कान्तर्गुप्त-चारिणी
नग्न-योनिः शून्य-वसना ख-गङ्गा-वि-प्र-वाहिणी

१५७.
ख-दुकूला ख-ल-प्राप्या प्राच्यङ्गी प्राच्य-नूतना
प्राणाध्वर-महा-होत्री प्राणोत्सव-वि-नर्त्तिनी

१५८.
सूक्ष्म-घोषा महा-घोषा प्राण-नाद-वि-नादिनी
नाद-शून्या शून्य-नादा नादान्त-ख-वि-सर्पिणी

१५९.
वि-सर्ग-सृष्टाऽनुस्वार-मौन-लीना लयाधिपा
वि-वर्त्त-चक्र-चरणी चक्र-बिन्दु-वि-लोपिनी

१६०.
चक्र-द्वयान्तरालस्था ग्रन्थि-गुण्ठन-तत्परा
ग्रन्थि-सम्भेदन-व्यस्ता बिन्द्वतीता स्व-केन्द्र-दा

१६१.
अ-व्यक्त-स्वर-सन्नादा व्यञ्जनादा स्वरेश्वरी
सर्व-चाञ्चल्य-शमनी स्पन्दनात्मा तडित्सरित्

१६२.
मेरु-दण्ड-स्पन्दयित्री शक्ति-चक्र-महेश्वरी
अर्ध-नारीश्वरी शैवी चार्ध-नारेश्वरी सती

१६३.
नित्य-शून्य-गुहावास-तपश्चर्या-फलात्मिका
अनङ्गिनी चेन्द्रियाङ्ग-विहारिण्यचला चला

१६४.
दिक्कालायम्बरा कोश-वस्त्रा विद्युत्-स्फूर्त्यंशुका
चिदम्बरा च चिद्-वेश्म-वि-हारिण्यफला बला

१६५.
शून्यादि-शून्यान्तान्तर्मौन-सिंहासनास्थिता
सर्व-च्छत्रेश्वरी वास्तु-जीव-संज्ञोदकेश्वरी

१६६.
नासान्तर्विचरत्सूर्य-चन्द्र-शक्ति-मयूखिनी
सरण्यूश्च शरण्या च सुखरा मौन-वाग्मिता

१६७.
मौन-वेत्तृ-महा-विद्या मौन-ज्योतिस्तरंगिणी
अ-चिन्त्य-चेतना चाभ्र-भ्रमयित्री भुवम्भरा

१६८.
आकाश-वसना नित्य-भर्गा स्नुत-पयोधरा
तन्त्रिणी तन्त्र-राज्ञी च मन्त्र-स्रोतः-सरित् सु-गा

१६९.
सु-गतिः सौम्य-रशना चेतः-पर्यङ्क-शायिनी
चित्तोद्बोध-करी चैत्य-श्मशानोज्जीवनी चिता

१७०.
परार्ध-जप-रिक्थेशी नक्तेशी च दिवेश्वरी
भवती भवदाकारा भावत्की त्वं-स्व-रूपिणी

१७१. युष्माकीना चास्मदीया सर्वेषां तत्त्व-रूपिणी
प्राची प्रतीची चैवोर्ध्वा ध्रुवोदीची च दक्षिणा

१७२. आग्नेय्यपि च वायव्या ईशानी चैव नैर्ऋती
सर्व-दिक्-समवस्थाना सर्व-दिक्-प्र-वि-लोपिनी

१७३. जाग्रती स्वप्न-साम्राज्ञी सुषुप्तिः प्रलयात्मिका
प्र-ज्ञा-पारमिता वज्र-च्छेदिनी च्छिद्र-प्र-पूरणी

१७४. सम्प्रतीका साम्प्रतिकी स्वैरिणी ब्रह्म-चारिणी
स्थविष्ठा सुषिरा पाङ्क्ती स्व-धितिश्चाक्षितिः क्षितिः

१७५. किम्पदार्था सत्पदार्थाऽसत्पदार्थाऽद्विधा-स्थिता
प्राणिन्यपानिनी व्याना समानोदान-सत्त्व-गा

१७६. श्रद्धाऽश्रद्धा चिकित्सा च वि-चिकित्साऽधृतिर्धृतिः
बिन्दु-सिंहासना बिन्दु-वेदध्री विदध्या विधान-दा

१७७. शत-सागर-गाम्भीर्य-प्र-मात्री क्षब-रूपिणी
भवोदध्यन्तगा नौका प्राणन्ती बिस-तान्तवी

१७८. कूर्म-पृष्ठ-समासीना कूर्म-नाडी-सम-स्थितिः
आधार-शुद्धिराधार-स्थैर्य-दा शेष-शायिनी

१७९. प्राणन्ती प्राण-सद्रूपा प्राण-मूला मनोमयी
लसद्रूपा रिक्त-रूपा निरूपाख्यप-रूपिणी

१८०. पञ्च-प्राणा मध्य-सूक्ष्मा चोर्ध्वाध-उभयायना
बहिर्गतिश्चान्तः-स्थिता भ्रू-मध्य-सु-वि-लासिनी

१८१.
प्राणन्ती प्राण-सद्रूपा प्राण-मूला मनोमयी
लसद्रूपाऽरिक्त-रूपा बिरूपिण्यभितः-प्रथा
१८२.
पञ्च-प्राणा सु-सूक्ष्मान्तोर्ध्वगामिन्युभायना
अन्तर्यानी बहिर्यानी भ्रू-मध्य-सु-वि-लासिनी
१८३.
सहस्रार-समारूढा स्मृत्याधाराऽसती सती
सिताऽसिता ताप-हर्त्री ताप-कर्त्र्यति-शायिनी
१८४.
ग्रन्थि-देवी सु-ग्रथिता ख-गा ग्रन्थि-वि-भेदिनी
नाभि-चक्र-वि-वर्त्तान्तर्भ्रमणी चक्र-वर्तिनी
१८५.
गगनानन्दिनी गाथा नृत्या गगन-नर्त्तिनी
नभो-मृदङ्गिणी गव्यागीता गगन-गामिनी
१८६.
ब्रह्म-प्रिया ब्रह्म-नादा प्रणवाधार-मेदिनी
पञ्च-तत्त्व-सुखाधारा प्रप्लुता प्रणवायना
१८७.
वेदिः स्रुवा प्रणीतात्मा चाहुतिर्हवनात्मिका
प्रेमा प्रिया सु-प्रियास्था प्र-णतिः प्रणयायना
१८८.
हाव-भाव-वि-भावात्मा सम्भूतिः सम्भवात्मिका
सम्भूः शम्भूः सर्व-राशि-र्माध्वी च मधु-मेदिनी
१८९
राश्यन्तः-सु-प्र-विष्टाऽहं-रेखा राशि-स्व-रूपिणी
चन्द्र-रेखा कला-कान्ता हंस-यन्त्रा नि-यन्त्रिणी
१९०.
स्वयम्प्रभा स्वयं-ज्योतिः स्वात्म-ज्योतिः स्वतः-स्तुतिः
दिक्सुभ्रान्ता महा-मौनी चाऽमावास्याऽपि पूर्णिमा

१९१.
सदोदिता सदा-श्वेता जगतामुदयङ्करी
अस्तङ्गमा सदा-श्यामा जगतां विलयङ्करी
१९२.
सर्व-शर्व-महा-शक्तिर्दैव-तेजः-समुद्भवा
अलसा च जविष्ठा चाजिरा देव-द्युति-प्रदा
१९३.
अर्थ-दीक्षा तत्त्व-दीक्षा मुद्रा-राज्ञी महाक्षरी
स्वर्ग-क्षितिश्चोर्ध्व-भूमिर्भाव-भू हृद्यरं-कृता
१९४.
ब्रह्मिष्ठा ब्रह्म-तनया सर्व-देव-मनोज-भूः
बृहती ब्रह्म-निलया ब्रह्माहुति-परायणा
१९५.
निष्कम्भा चैव वि-ष्कम्भा सर्व-स्तम्भ-स्वरूपिणी
गतागत-महा-मूला सर्व-स्तम्भन-रूपिणी
१९६.
ऋत-शीर्ष्णी सत्य-शीर्ष्णी ऋत-जिद् द्यु-निवेदुषी
शून्यासना नभो-वासा व्योमान्ता च ऋतायना
१९७.
शैली भाषा स्फुटा कूटा व्यङ्ग्या लक्ष्याऽभिधाऽभिधा
दृश्या श्रव्या सभाहार्या वाद्या गेया च नर्त्तिता
१९८.
अभिनीता राग-माला ऽलङ्कार-रस-राशि-धा
स्वाद्वी मन्दा द्रुता मृद्वी स्वर-सप्तक-सन्ततिः
१९९.
गान्धर्वी मानवी सौरी पार्थिवी दैत्य-प्रिया
यक्षिणी राक्षसी नागी नाग-कन्या नभोमयी
२००.
वासन्ती चैव हैमन्ती ग्रैष्मी हैमी च वार्षिकी
शारदी शैशिरी चान्द्री चार्त्तव्यार्तव-नर्तकी

२०१. एका द्वयी त्रयी सर्व-सिद्धाङ्ग-श्रीगणान्विता
गणना-बीज-भावान्ता न्या-भिति र्गुण-भाग-दा

२०२. आद्यीकृत-महा-सत्त्वा बोधि-सत्त्व-स्व-चित्त-भूः
भाव-भू रस-भूर्भूमा योग-भूतिश्च योग-भूः

२०३. अणिष्ठा चैव मंहिष्ठा देहिनी चाशरीरिणी
द्राघीयसी लघिष्ठा सा पुनर्मृत्यु-नि-रोधिनी

२०४. सर्व-चित्तान्तरभ्यस्ता सर्व-चित्तान्तर-स्थितिः
सर्व-चित्तमयी प्राणा सर्व-प्राणान्तरास्थिता

२०५. प्रत्याहृता प्रत्यवाय-व्याधि-बाधा-विनाशिनी
प्रिया प्रीता प्रीणनार्था प्रीतिः प्राण-प्र-पञ्च-गा

२०६. चित्त-कर्त्री चित्त-भर्त्री चिति-शक्तिश्चिदर्थिका
चारु-चन्द्र-स्मिता चार्वी चार्वङ्गी चारु-हासिनी

२०७. प्रेम-धीः पूर्ण-सम्बोधिर्विषादात्यन्त-नाशिनी
सर्व-भूत-प्रिया भूता प्रसादात्यन्त्य-दायिनी

२०८. स्वयं-प्र-सादा प्रासाद्या क्षुधित-प्राश-दायिनी
प्रसादिनी प्रसादात्मा चात्मान्तः-सम्प्रसादिनी

२०९. चित्त-सद्मान्तरारोह-चक्र-सोपान-सप्त-भूः
सर्व-मेधा धर्म-मेघा सम्पन्मेघ-प्र-वर्षिणी

२१०. शुभ्रा शुभ्रार्थ-सम्भाषाऽप्य शुभार्थ-नि-वारणी
अ-शुभार्थ-शुभं-कर्त्री शुभ्राभ्रा शुभ्र-चेतसी

२११. पर्ण-भुक् त्यक्त-पर्णा चाप्यपर्णा समुपोषिता
नित्य-तृप्ता चात्म-तृप्ता स्वात्म-तत्त्वान्न-पोषिता

२१२. अनन्त-कोटि-ब्रह्माण्ड-वि-शाला विशदा वि-धा
कृशा तन्वी महा-पीना स्व-वि-रुद्ध-सामग्र्य-भूः

२१३. सर्व-वाङ्मय-निर्घोषा ऽप्यजात-शिशु-मौनिनी
मुनि-मानस-मौनान्तस्तपस्तेजोऽग्नि-भू-धरी

२१४. मौन-मन्त्र-समुच्चार-तरङ्ग-विलय-प्र-भूः
परि-पूर्ण-निजाहन्ता-महा-शिव-वृता वधूः

२१५. तारा तारक-मन्त्राद्यो-मध्यमान्त्य-वि-चारिणी
स्वादिष्ठेष्टा मदिष्ठा च श्रेष्ठा प्रेष्ठा ऽबर्हिः-कृषिः

२१६. पयः स्रुतिश्चान्तर-स्तोत्रा निशोषा रश्मि-कर्षिणी
नाम-रिक्ता ब्रह्म-नाम्नी महा-नाम्न्यादि-मन्त्र-गा

२१७. मनः कर्त्री मनो-हन्त्री प्राणि-वृन्द-मनो-हरा
सर्व-प्राणि-स्व-सौन्दर्य-धातु-तेजोऽग्नि-रञ्जनी

२१८. मनो-धात्री मनो-नाशा शून्य-शब्दार्थ-मर्म-गा
उत्पत्तिश्चाप्यनुत्पत्तिः सृष्टिर्विसृष्टि-रञ्जनी

२१९. पृथिवी प्रथिता प्रार्थ्या प्रार्थना प्रथिमा प्र-धीः
धारा धार्या समुच्चार्या सप्त-स्वर-रस-श्रुतिः

२२०. कैलाश-शिखराकारा कैलाशाधार-सं-स्थिरा
विदिताऽविदिता वेद्या यज्ञ-वेदि-विधि-प्रदा

२२१.
यज्ञ-वेदिर्यज्ञ-योनिर्ब्रह्मचर्य-फलोर्कप्रदा
चरू-चारू-समाचारा अर्घ्य-स्था घृत-धर्मिणी

२२२.
यज्ञ-कुण्ड-समालीना यज्ञ-ज्वालाग्नि-सु-ज्वला
सप्त-जिह्वा सप्त-वर्णा चेन्द्र-चाप-वि-हारिणी

२२३.
समस्त-ब्रह्म-वेदान्त-विदिता वेद-सम्भवा
समस्त-वेतॄणां वेत्री निगमागम-सङ्गथा

२२४.
वैराग्यार्थपरा काष्ठा वशीकार-गीतर्मतिः
परमाणु-महत्त्वान्ता चाष्ट-सिद्धि-स्व-रूपिणी

२२५.
सत्य-सिद्धान्त-मर्म-ज्ञा सर्व-दर्शन-दृष्टि-दा
समाविष्कृत-सर्वार्था सर्व-दर्शन-वर्जिता

२२६.
रिक्त-धर्मा सर्व-धर्मा चतुर्वर्ग-नि-रूपिणी
अरि-षड्-वर्ग-विन्यास-सन्यास-रुचिरात्मिका

२२७.
आध्यात्मिकी चाधिदैवी चाधिभौतिक-सम्पदा
पारङ्गता पारे-स्थिता चाविदूर-नि-वासिनी

२२८.
सर्व-शक्तिः सर्व-भूमिस्सर्व-नारी-स्थिति-स्मृतिः
वैषम्य-विलयाधान-निपुणा सम-सं-स्थितिः

२२९.
अनुस्वार-प्रकाशार्थ-वि-च्युताऽऽविस्तिरोहिता
विसर्गार्थ-विधि-प्रज्ञा-वि-बोधन-वि-सं-सृतिः

२३०.
अनुस्वार-महा-बिन्दु-सरोजान्तर्हित-प्रभा
सं-सृति-प्रलयाध्यक्षा सं-सृति-प्र-वि-सर्जनी

२३१.
संसार-विमर्शोद्धारा साम्यावस्था-वि-लोपिनी
सं-सृत्यन्तर्बहिः-स्थात्री सर्व-संस्कृति-भावना

२३२.
त्रि-दोषा त्रि-गुणा सप्त-धातुरेकादशेन्द्रिया
त्रि-शरीरा पञ्च-कोषा नव-चक्रा हिरण्यया

२३३.
सर्व-चैतन्य-कूट-स्था चित्ताधाना दशाश्चितिः
सु-वि-पश्यानु-पश्यार्था चान्तरात्म-वि-लासिनी

२३४.
अ-पराङ्-मुख-दृष्टिः सा नान्तर्मुख्यबहिर्मुखी
तरङ्गिणी परि-ष्यन्दा पयो-धारा-प्र-वाहिणी

२३५.
धर्म-नीतिश्चार्थ-नीतिः कामेशी मोक्ष-सद्विधा
नीति-न्याय-नयाधारा चार्थ-वार्त्ता-फल-क्रमा

२३६.
सर्व-वेदार्थ-नि-ष्यन्दा गद्य-पद्य-प्र-बन्धिनी
निष्पादिनी सु-निष्पन्ना पद्धति-प्रति-पादिनी

२३७.
अस्ति-रूपा भाति-रूपा प्रिय-रूप-प्र-भासिनी
अ-नामिका नाम-सञ्ज्ञा सूत्र-मन्त्र-वि-धायिनी

२३८.
नि-षिद्धा वि-हिता नित्या उत्सर्गिण्यप्यपोदिता
उत्सृष्टा सृष्टि-शमनी शम-सम्पन्नियामिनी

२३९.
अन्तरङ्गा बहिरङ्गा सर्व-नामसु वि-श्रुता
संहिता ऽसंहिता सन्धिरसमस्ता समासिनी

२४०.
परि-भाषा वि-भाषा वा च्छान्दसी लौकिकी तथा
व्यतिरिक्ता चान्विता च सार्वदेश्येक-देशिनी

२४१.
कल्या काल-कला कूटा अ-कार्या कार्य-कारिणी
भूरि-भूमा प्राण-संख्या शतिनी च सहस्रिणी

२४२.
बह्वीत्येका स्तोक-संख्या शून्य-बिन्दु-नि-वासिनी
अव-क्षेपोत्क्षेप-कर्त्री सं-कोचनी प्र-सारणी

२४३.
गुरुत्वाकर्षणी गुर्वी वि-कर्षिण्यगमा गमा
परा सु-पारा पश्यन्ती मध्यमा चैव वैखरी

२४४.
अनन्त-कोटि-ब्रह्माण्ड-जन्म-क्षण-नि-नादिनी
सर्व-लोक-ध्वनि-ध्वान्त-शमन-स्तनयित्नु-दा

२४५.
अक्षि-स्थिता चाक्षि-राज्ञी समस्तेन्द्रिय-शासनी
भक्त्यर्घा न्याय-मीमांसा वैशेषिक-वि-शेष-गा

२४६.
अन्तरिक्षाशनी विश्व-भेषजी भगवत्तरा
ब्रह्माण्डान्ता प्रभा-स्पन्दा भूत-राज्ञी प्रभांशुका

२४७.
श्वेत-रक्त-महा-नील-बिन्दु-प्रासाद-भामिनी
महा-बिन्दुः सूक्ष्म-बिन्दुः रस-कुङ्कुम-वासिनी

२४८.
सिन्दूर-रस-बिन्दुश्च बैन्दवी रस-बान्धवी
रस-बन्धन-सच्छक्तिर्महा-पाश-रसेश्वरी

२४९.
पाप-पाशविनाशार्था पुण्य-पाप-वि-भेदिनी
अ-शुक्लाकृष्ण-कर्माढ्या सर्व-धर्म-वि-मोचनी

२५०.
मन्त्र-धी-चोदिनी भर्गा निगमागम-पेटिका
ज्ञानेशी सर्व-कर्मेशी मौन-लोक-महेश्वरी

२५१.
अ-कूपारा च गम्भीर- सूक्ष्म-तत्त्व-प्र-वेशिनी
सर्व- तात्पर्य्य- कोट- द्वारर्थ- दुर्ग- प्र- भेदिनी

२५२.
सर्वार्थोद्घाटन-परा सत्य-लोक-नि-वासनी
एकार्था सर्व- तत्त्वार्था सर्व- मन्त्रार्थ- बोधनी

२५३.
अनन्ताखण्ड-विश्वाण्ड-शिशु-धात्री च शैशवी
शिशु- रूपा यौवनर्द्धिः प्रौढा मृत्यु-जराऽभया

२५४.
नीपाटवी-कुटीर-स्था नव- नाद- गभस्तिका
सर्गादिक- महा- नाद- संगीत-रस- रूपिणी

२५५.
प्र- वहत्सलिलाकारा वज्र-शैल-घनाकृतिः
ऊर्ध्व- ज्वालाऽसि- धारा सा वात्योद्वेलन-वेगिनी

२५६.
सर्व- चित्तान्तर- द्वन्द्व- सन्धि- सं-वाद- कारिणी
स्वर- सन्धिः पदार्थज्ञा समास-पद- भाविनी

२५७.
मृग- तृष्णा-प्र-शमनी मृग- तृष्णा- प्र- दर्शिनी
ऋतेश्वरी सत्य-राज्ञी चानृतासुर- मर्दिनी

२५८.
अनाहत- गुहा-रङ्ग- नित्य-नर्तन- किङ्किणी
शत-वाद्य-स्वर- रसा स्वर- नूपुर- नर्त्तिनी

२५९.
अन्तः-सूक्ष्मा बहिः- सूक्ष्मा स्थूला स्थूलतमाग्रजा
बिस- तन्तु- सहस्रांश- तन्वी मानस- वर्त्तिनी

२६०.
सर्व-राग-प्रिया सर्व- वर्ण- क्रम- वि- सारिणी
संगीत- वासिनी श्वेता रक्ता नीला त्रि- वर्णिनी

२६१.
स-वनान्तर्निधुवनी ख-कुञ्ज-मधु-कूजनी
पुं-शुक्रान्तः-सृष्टि-शक्तिः पौरुष-वीर्य-वि-सर्जनी
२६२.
गर्भाण्डान्तः सृष्टि-शक्तिर्गर्भाण्ड-सु-वि-सर्जनी
शुक्राण्ड-शक्ति-सं-योग-महा-मोद-वि-नर्त्तनी
२६३.
ब्रह्मचारि-व्रतानन्दि-रेत-ऊर्ध्व-प्रणायिनी
सर्वेन्द्रिय-परि-ष्यन्दि-काम-भोग-तरंगिणी
२६४.
सर्वेन्द्रिय-परि-स्पन्द-प्रत्याहार-परायणा
प्रणव-प्रवणा क्षुत्-तृट्-काम-जाल-वि-भेदिनी
२६५.
महायुग-महा-कल्प-महा-काल-प्र-वर्त्तनी
क्षणाणु-कोटि-भागान्तर्महा-काल-प्र-सर्पणी
२६६.
अणिष्ठ-क्षण-कोट्यंशाभ्यन्तः-सूक्ष्मतरेक्षणा
काल-भेत्त्री चित्र-काला गगनान्त-वर-स्तनी
२६७.
अन्तर्गुरु-महा-वाणी-माध्वी वर्ण-मधु-प्रिया
हिरण्य-गर्भ-प्र-जनिर्निष्प्रजा प्रजनात्मिका
२६८.
सर्व-प्राणि-प्रजा-दात्री सर्व-प्राणि-प्रजाधिपा
सर्व-प्राणि-प्रजा-धात्री प्राणि-सं-हरणात्मिका
२६९.
सांख्य-वेदान्त-योगार्था जिन-शास्त्र-प्र-शासनी
बोधि-पारमिता बौद्ध-परमार्हत्त्व-दायिनी
२७०.
प्राणाद्यन्तेश्वरी प्राणि-प्रायणी प्राण-रक्षिणी
पञ्च-प्राणान्त-गमना प्राण-तृष्णा-क्षुधात्मिका

२७१. सान्त्वयन्ती शिवाश्लेषा चान्तश्चुम्बन-तत्परा
कैलाश-मणि-बिन्द्वन्त-चुम्बिनी मेरु-चुम्बिनी

२७२.
सु-वर्णा सर्व-वर्णादा पद्म-पत्रान्न-भोजना
श्वेतः स्फटिक-मुक्तान्तः-पुरी-शत-वि-हारिणी

२७३. सर्व-संख्याऽऽत्मिका संख्याऽतीता सांख्य-महेश्वरी
प्रसंख्यानात्मिका संख्योत्तर-तत्त्व-वि-मर्शिनी

२७४.
आधाराद्यान्तगमनी निर्वाण-वर-दायिनी
गुरु-चक्र-पथाराध्या गुरु-चक्र-वि-हारिणी

२७५.
लोक-त्रय-क्रीडनिका क्रीडा-सृष्टि-लयारता
भोग-कर्म-परि-स्पन्द-भूरि-क्रीडनक-प्रिया

२७६. क्रीडाऽभिधा सर्व-योग-क्रिया-क्रीडा-फलार्जनी
द्वयाद्वय-क्रीडा-शक्तिः क्रीडा-योग-रस-प्र-दा

२७७. तृषा-तृप्त्येकाप्सरिणी क्षुदन्नैक-वि-राधिनी
भिक्षा-राज्यैक-सम्मान्या भोग-मोक्षैक-तत्त्व-दा

२७८. महा-प्राण-प्र-णयनी प्राण-प्र-णय-सुन्दरी
प्राण-कुम्भ-स्तनी प्राणा प्राणन्ती प्र-णि-पातिनी

२७९.
उन्मावन्त-समाऽनुन्नाऽवन्ना चोन्नावन्चेश्वरी
समस्त-चित्त-भूमि-स्था धर्म-मेघ-समाधि-भूः

२८०. अ-पराञ्ची चान्तर्दृशा बाह्य-द्वारापिधायिनी
अन्तर्द्वार-समुद्घाट-पट्वी साक्षात्कृतीश्वरी

२८१.
ब्रह्मात्मैक्य-सु-सं-गीत-सूक्ष्म-रागान्त-मूर्छना
चित्त-द्वन्द्वैक्य-करणी प्रति-द्वन्द्व-वि-लापिनी
२८२.
नित्य-लुप्ताऽप्यलुप्ता च द्वन्द्व-शात्रव-लोपिनी
नित्याशात्याव्ययोध्या च सर्व-शात्रव-शातिनी
२८३.
सत्याऽहिंसा-सु-सन्तुष्टा चास्तेना स्तैन्य-मर्दिनी
ब्रह्म-चर्य-प्रिया ब्रह्म-दृष्टि र्ब्रह्म-वि-चारिणी
२८४.
मैत्र्याद्युपेक्षान्तमयी चित्त-स्थिति-नि-बन्धनी
सप्त-प्रज्ञा-प्रान्तमयी शश्वद्-ब्रह्म-वि-हारिणी
२८५.
शुचिश्शौच-सु-सन्तोषमयी नित्य-तपः श्रिता
जप-स्वाध्यायिनी नित्य-स्वात्माध्ययन-तत्परा
२८६.
ईश्वरार्थ-महा-यज्ञ-सर्व-योग-क्रियार्पणी
सर्व-भूम्यर्पण-रता प्रणव-प्र-णि-धानिका
२८७.
प्राण-पुष्पार्पण-प्रीतिः प्राण-कुम्भ-वि-हारिणी
आत्मसात्कृत-सद्भावा चात्मसात्कृत-शङ्करा
२८८.
त्रि-गुणा त्रि-गुणातीता निर्गुणा गुण-भूः स्वयम्
त्रि-षमा चावि-दोषा च त्रैत-वैषम्य-नाशिनी
२८९.
भस्मालेपा भस्म-रूपा भस्मात्मा चैव भस्म-धूः
भस्मी-कृत-महा-भूता हुत-भस्मा च भस्म-भूः
२९०.
भस्मी-कृत-शिवा शास्त्री भस्मी-कृत-महा-भया
स्व-वि-ग्रह-भस्मान्त-करी सा भस्म-केशिनी

२९१. भस्मसात्कृत-व्योमान्ता सर्व-काय-प्र-दाहिनी
भस्मोद्धूलित-सर्वाङ्गी भस्म-शेषी-कृतालया

२९२. समस्त-लोक-लोकान्त-भस्मी-करण-तत्परा
भस्म-दृष्टिर्भस्म-कल्पा चोत्सवी-कृत-भौवना

२९३. भू-कृ-धातु-समानार्था-चास्ति-नामा बुभूषिका
जायमाना सदाऽजाता क्षणशः परि-णामिनी

२९४. प्रेप्सा ऽप्रेप्सा जिहासा चाऽजिहासा च चिकीर्षणा
अचिकीर्षा च जिज्ञासा ऽजिज्ञासेत्युभयात्मिका

२९५. क्षणस्यायुत-भागस्याप्ययुतांश-स्फुरत्कला
अणोश्चायुत-भागस्याप्ययुतांश-प्र-माणिनी

२९६. अणु-क्षणा महा-विश्व-काल-सम्पत्स्व-रिक्थका
काल-शक्ति-महा-नागी श्वास-प्र-श्वास-सूत्रिणी

२९७. श्वासोद्गमा महा-श्वासा ख-तत्त्व-श्वसन-प्रिया
निः-श्वास-व्यक्त-जगती श्रुत्याम्नाय-वि-निः-श्वसा

२९८. आर्त्तार्थि-प्राणि-वर्गात्यन्ता श्वास-प्र-दायिनी
अत्यन्त-मरणासन्न प्राणनी सम्प्रजीवनी

२९९. दुःख-सौख्यैक-करणी बन्ध-मोक्षैक्य-भावनी
सर्व-सौख्येश्वरी सर्वानन्द-मोद-नि-धानिका

३००. सर्व-काम-नि-कामेशी ब्रध्न-विष्टप-वासिनी
अजैकपादहिर्बुध्न्य-श्वास-कुण्डल-सर्पिणी

३०१.
समस्त-बाष्प-कुहक-च्छाया-माया-स्व-रूपिणी
समस्त-बाष्प-कुहक-च्छाया-माया-वि-लोपिनी
३०२.
ऊर्ग्देहा मन्त्र-देहा च ज्योतिर्नाद-स्व-देहिनी
सर्व-देह-स्व-देवात्मा महा-गगन-देहिनी
३०३.
जीवात्म-देहत्व-परा देहाहं-प्र-वि-मर्शिनी
देहाहं-कृति-सन्यासाभ्यनु-शासन-तत्परा
३०४.
अहन्देह इति-च्छाया-प्रति-भासन-तत्परा
अहन्देह इति-च्छाया-प्र-वि-नाशन-तत्परा
३०५.
नाहन्देह इति-प्रज्ञा-सम्प्र-काशन-भावना
नाहन्देह इति-प्रज्ञा-धारणी च वि-देहिनी
३०६.
भूरि-सन्देह-देहात्मा सन्देहन-नि-रोधिनी
देहि-देह-वि-सम्बन्ध-सम्बन्ध-प्र-णि-यामिनी
३०७.
पञ्च-तत्त्वादि-कर्पूर-चन्दनागुरु-दिग्धता-
कृत-देहादि-सम्बन्धा सर्व-सम्बन्ध-भामिनी
३०८.
गुण-वर्गाति-वैषम्य-वि-कृति-सृष्टि-कोविदा
गुण-वर्ग-पुनः-साम्य-प्रकृति-प्र-लय-प्रथा
३०९.
सु-वज्र-घन-सान्द्रार्थ-पार-दर्शि-स्व-नेत्रिता
निद्रा-प्र-ज्ञा स्वप्न-सं-ज्ञा गुडाकेशी मही-धरा
३१०.
तथता योग-निद्रान्तर्ब्रह्मानन्दोप-भोग-दा
निर्विण्णा च हृषीकेशी हृदयान्तः-सु-गीतिका

३११.
क्षण-कोटि-सहस्रांशाभ्यन्तः-कोटि-सहस्रक-
कृत्वः परि-भ्रमज्ज्योतिश्चक्र-कोटि-समन्वया-

३१२.
पिपीलिकेश-ब्रह्माण्ड-तृण-कीट-पुरी-स्थित-
स्व-शक्ति-चक्र-वि-भव-प्र-भव-प्र-लय-स्मिता

३१३.
परमाणु-महत्त्वान्ताभ्यन्तर्गगन-चारिणी
हृद्-गुहा-दहराकाशाभ्यन्तर्ज्योतिः-स्वरूपिणी

३१४. सत्य-सन्दोहनी सत्या सत्यानृत-वि-वेचनी
स्वयम्भूः सतत-स्वान्तः-स्वयन्धारा-प्र-वाहिणी

३१५.
अ-प्रेरिता प्रेरणात्मा सर्व-शक्ति-समीरणी
पद्म-नाल-महाऽऽकाशाभ्यन्तर्ब्रह्माण्ड-सर्जनी

३१६.
पद्म-नाल-महा-नाड्यभ्यन्तः-सौदामनी-गतिः
चित्र-सौदामनी चित्र-वर्ण-ज्योतिः-सहस्रिका

३१७. आ-सहस्रार-पादान्त-युगपच्चलत-सौर-भा-
च्चित्राति-चित्र-प्र-वहत्-सौरज्जाल-प्र-भास्वरा

३१८. प्राण-वात-तरङ्गायत्-सित-प्र-भा-दुकूलिनी
चित्र-वर्णांशुका चित्र-भानु-साहस्र-मातृका

३१९. चित्र-शाटी चित्र-केशी चित्र-ज्वाला वि-चित्र-भूः
जिन-भूर्जिन-साम्राज्ञी साऽर्हत्-पद-सुधा-प्रथा

३२०. अल्ला माता तथा यह्वा मरी वाञ्छा-प्र-दायिनी
यीशावतार-शारीरी लीला-कण्टक-मौकुटी

३२१.
सु-मनः- सु-मनो- माला चैतन्य-सु-मनः-स्मिता
वि-चित्र- वर्णावरणा धारा सन्धारकोत्तमा
३२२.
अति- गम्भीर-भू-गर्भ-कम्पन- द्रव- चुम्बका
आश्वासिनी निः-श्वसिनी प्र-वाह- प्रत्ययात्मिका
३२३.
मेरु-दण्ड- स्थिति-करी कैलाशाधार-रक्षिणी
साध्वी सन्यासिनी दण्ड-कमण्डलु- करा दृढा
३२४.
समस्त-लोक- लोकान्त-परि-व्रजन- तत्परा
स-परि-व्राट्-परीवार-राज्ञी नीराजनार्थिनी
३२५.
अ-संख्य- कोटि-विश्वाण्ड-स्थोप-ग्रह-शशि- ग्रह-
धूम-केतु-महा-राशि-रवि- दीपक- मालिका
३२६.
अ-संख्य-कोटि-विश्वाण्ड-प्राविष्कार-तिरस्करी
अ-संख्य-कोटि- विश्वाण्डाभ्यन्तर्बाह्य- प्र-वि-स्फुरद्-
महा-गगन-हर्म्येशी प्र-वि-शालाऽणु-मात्र-गा
सहस्र-चक्र-सम्फुल्ल-कुड्मलोद्घाटन-वि-शारदा
३२८.
अन्तः-स्था च बहिष्ठा च दविष्ठान्तिक-यामिनी
मंहिष्ठा सु-महाकाश-केशी केशव-नन्दिनी
३२९.
समस्त- वनिता-वृन्द-वन्दना- मन्त्र-साधना
कामना धरि-षड्-वर्ग-मल-क्लेश-नि-षूदनी
३३०.
निर्विघ्ना नित्य-निर्विघ्ना चोदासीन-जन-प्रिया
रक्ता रागिण्युदासीना वि-रक्ता वि-रजेश्वरी

३३१. अद्वैती चैकिका द्वैती त्रयी त्रैती त्रि-जाग्रती
न-सन्नासन्न-सदसत् सर्वासत्-सत्-सदेश्वरी

३३२. अनन्या नित्य-प्रामाण्या नित्यानित्य-प्रथेश्वरी
वीत-राग-महा-सिद्ध-चिच्चित्त-हृदयासना

३३३. सहस्र-कोटि-कल्पान्तर्जनि-शक्ति-वि-राजिता
क्षण-कोटि-सहस्रांश-स्पन्दनानु-वि-नाशिता

३३४.
कोट्यर्बुद-त्रयस्त्रिंशद्-देव-हस्त-समाश्रित-
नीराजन-मणि-स्थाली-रत्न-दीप-प्रभा-प्रति-

बिम्बालं-कृत-सौवर्ण-मुकुटार्पित-महा-नभो
ज्वाला-केशाबद्ध-चूडाऽन्तर्हित-सु-गूहित-
चतुर्दशालोक-वर्ग-सुमेरु-शिखरी-कृत-
बिन्दु-भेद-महा-मुद्रा-ध्यान-साध्य-समाधि-दा

३३७. द्वैतान्न-प्राशिनी पद्म-पत्र-चक्र-वि-भोजनी
मालाऽक्षराशनाया सा चोर्जा-दोह-पिपासिनी

३३८. ब्रह्माण्ड-गगन-स्थाली-पाक-लोकान्तरार्बुद-
सहस्र-व्यञ्जन-रसाऽऽस्वादन-ध्यान-तत्परा

३३९. अभि-नि-वेश-नाशार्थी मिथ्या-मृत्यु-वि-दारिणी
अ-द्वय-स्थैर्य-दात्रीयं चञ्चरीक-द्वय-व्रता

३४०. मृषा-भाव-मृषा-वाद-भ्रम-रोग-महौषधिः
इच्छा-मृत्यु-वराध्यक्षा ब्रह्म-चर्य-व्रत-प्र-दा

३४१.
प्रकृति-ब्रह्मचर्यान्तरोजो-बिन्दु-वि-धारणी
नागोर्ध्वोच्च-फूत्कारा नाग-राज्ञी वि-सर्पिणी
३४२.
आम्नाय-स्मृति-साम्राज्ञी स्मृति-दात्री स्मृतार्चना
स्मितिः स्मित-महा-राशिः वि-स्मितिश्च स्मितार्चना
३४३.
महा-नदी महा-नाडी मूर्धन्युद्-घूर्णनी मदा
सिन्धुतमा नदीतमा ब्रह्माण्ड-रञ्जनीतमा
३४४.
सृष्टि-स्मितिर्बोध-स्मितिः स्पन्द-स्मितिः सदा-स्मिता
ब्रह्माण्ड-स्वप्न-स्मिति-दा सत्त्वौज्ज्वल्य-महा-स्मितिः
३४५.
साध्या सद्-भावनीश्श्रोता पावनी भावनी मृडा
विष्णु-रूपा विश्व-रूपा वि-विधा वि-विधेश्वरी
३४६.
समस्त-साम्य-वैषम्य-हेतुः सु-वि-षमा समा
अजिरा सु-मनः-सं-स्था शोषिणी शोक-शोषिणी
३४७.
तीर्थ-राज्ञी तीर्थ-रूपा तीर्थ-स्था तीर्थ-यात्रिणी
सर्व-तीर्थमयी तारा तार-मन्त्रार्थ-रूपिणी
३४८.
यज्ञ-वेदिर्महा-वेदिः कुण्ड-स्था वेद-वन्दिता
गाथा गीतिश्च गीर्वाण-गीरप्त-गुरु-सम्भवा
३४९.
द्वित्वैकत्व-बहुत्वानां सर्वथैक्य-वि-धायिनी
मूकानां वाक् तथाऽन्धानां दृष्टि-सन्धान-सं-क्षमा
३५०.
निरिन्द्रियाणामिन्द्राणी बद्धानां शृंखलाऽप-हा
अभ्यासिनी वि-रक्तिश्च पूर्ण-वैराग्य-रूपिणी

३५१.
वि-नष्टिशाधि-व्याधीनां समाधिं-शमथ-स्थिति:
नि-रोधिनी वृत्ति-हीना चैकाग्र्य-वर-दा वृता

३५२.
मुत्या सर्व-फलात्यर्था योग-भूमि-स्व-रूपिणी
मधु-भूमिस्सु-मन्त्राद्याऽजल्याजाप्य-स्व-रूपिणी

३५३.
सर्व-स्पन्द-वि-नि-ष्पन्दत-सरित-सागर-सं-गमा
कार्या कर्त्री कर्म-रूपा कृषि-शस्य-क्रतु: कृता

३५४.
दहराभ्यन्तराकाशाखण्डानन्त्य-महीयसी
वि-भज्य-वक्त्री सूक्ष्मार्था द्राघीयसी लघीयसी

३५५.
पूर्णा पूर्णतमा दर्वी विद्युद् वेध्या वि-वेधिनी
वि-द्योतिनी द्रुततमा सदा-प्रेमा तरंगिणी

३५६.
महा-बिन्दु-धना धेनु: स-घना घन-भेदिनी
गुहा गोप्या गुहा-वासि-योगि-मण्डल-मण्डनी

३५७.
अनन्त-कोटि-ब्रह्माण्ड-गङ्गा-क्षीर-कमण्डलु:
एक-ध्वनि-महा-कोटि-वि-भाजन-वि-शारदा

३५८.
समस्त-वर्ण-ध्वन्यैक्या ऽर्भवन्तर्नि-नादिनी
ध्वनि-कोटि-महा-ध्वाना ध्वनि-सौक्ष्म्यान्त-गामिनी

३५९.
शङ्ख-संख्यक-विश्वाण्ड-शङ्खान्तर्वक्र-वलय-
गुञ्जद्दुच्च-महा-नाद-ध्वनितोङ्कार-रूपिणी

३६०.
साध्या सद्-भावनी भाव-पावनी भव-मर्दिनी
चित्त-श्रव्या चित्त-नाडी-चेष्टा-शक्ति-वि-चर्षणी

३६१.
चक्ष्या लक्ष्या योगि-शक्तिर्योग-लक्षण-लक्षिता
ग्रथिता ऽग्रथिता ग्राह्या प्राप्या चक्षुष्मती सखी
३६२.
समान-सं-स्था सं-स्थाप्या धापयन्ती त्वरा तडित्
धीति-धर्त्री धर्म-सं-स्था साम्यावस्था-स्व-रूपिणी
३६३.
प्राणायामि-प्रत्याहार्या प्राण-वाहन-कर्षिणी
आ-वाहयित्री सं-वेद्या वेदानुष्ठान-धर्मिणी
३६४.
महा-कालाग्नि-वि-ज्वाला-धूम-धम्मिल्ल-धारिणी
धर्मान्त-गूढा नैवेद्या चाद्य-श्वः-काल-रूपिणी
३६५.
क्षणिनी ध्वंसिनी धात्री क्षिति-जन-क्षय-कारिणी
भूतादि-कारणी-भूता तत्त्वान्त-लय-कारिणी
३६६.
कारकाणां कारिका स्वा ऽप्य-वि-भाज्या वि-भक्तिभिः
ललिता च लकारेषु ललना पुं-स्व-रूपिणी
३६७.
वितथा ऽवि-तथा ध्वान-ध्वान्तान्ताध्व-प्र-दर्शिनी
अध्व-सम्मौनिनी त्र्यध्वा काल-ध्वान्त-वि-लोपिनी
३६८.
स्व-राड्-वि-राण्मयरूर्ज्जुर्भिन्ना भुरिङ्ङ्गिस्त्र्लगा ऽलगा
सर्व-छन्दो-वृत्त-मात्रा-वर्ण-प्रस्तार-रूपिणी
३६९.
प्र-यत्न-करण-स्थान-स्पर्श-प्राण-वि-भाजनी
उच्चानुदात्त-स्वरिता घोषा ऽघोषा वि-सं-वृता
३७०.
शङ्ख-स्था तालु-कण्ठ्यौष्ठ्या ध्वन्याध्वन्य-वि-वर्तिनी
कूजा-कुब्ज-स्वरोद्यान-मूर्ध-ब्रह्माण्ड-गुञ्जिनी

३७१.
अनाहत-महा-मौन-नादितान्तर्महा-गुहा
नाद-ज्योतिर्ध्वनि-ज्वाला नाद-ज्वलित-कुण्ड-गा

३७२.
ज्योतिर्नदन-ताल-स्था नाद-लोकाटन-प्रिया
ज्योतिर्नाद्या नाद-नाद्या नट-राज-वि-नर्तिनी

३७३.
नट-राज-प्र-भा-ज्वाला लेश्याभ्यन्तर-चारिणी
नास्तीवैवं-लेश-मात्रा लेश-मात्राऽव-तारिणी

३७४.
परमाणु-महत्त्वान्त-सूक्ष्म-लेश-वि-भाजिता
परमाणु-महत्त्वान्त-लेशार्बुद-समन्वया

३७५.
समन्वय-महा-देवी वि-भाग-व्यतिरेकिणी
समन्वित-वि-भाग-ज्ञा सूर्य-चन्द्र-वि-मर्दिनी

३७६.
क्रोधिनी वि-गत-क्रोधा निर्मोहा नित्य-मोहिनी
इहामुत्रार्थ-वैराग्या नित्यानित्य-वि-वेकिनी

३७७.
शम-षट्क-समासाद्या मुमुक्षु-पद-दा स्वयम्
क्लेशी काल-कलनी नित्यानित्यार्थ-वास्तवी

३७८.
तमो-मोह-महा-मोह-तामिस्रान्ध-वि-पर्यय-
क्लेश-राज्येश्वरी क्लिष्टा क्लिष्ट-वृत्ति-नि-रोधिनी

३७९.
चैत्त-पटल-कालुष्य-संस्कारान्त-नि-वारणी
चतुर्ब्रह्म-वि-हारार्थ-चैत्त-कुञ्ज्झाटन-प्रिया

३८०.
कालान्धक-महारण्य-दाहिनी ज्वलित-प्र-भा
सप्त-भूः सप्त-वि-शिखा सप्ताऽऽस्या ऽऽस्य-वि-सर्पिणी

३८१.
नित्य-प्र-ज्वलिता ज्वाला-कोटि-रूप-पदार्थ-भूः
लोक-लोकान्तराकार-ज्वाला-वृत्ति ज्वराधि-हा
३८२.
ज्वर-दा ज्वर-भू-व्याधि भेदा-ज्वर-वि-रूपिणी
नि-ज्वरा ज्वर-सं-हार-मानसौषधि-रूपिणी
३८३.
मुख-स्थ-रसना-लोक-कर्त्री रस-वि-भाजनी
वि-भक्त-रस-सं-चार-सम्प्रदाय-वि-हारिणी
३८४.
वि-भक्त-रस-सं-सार-ब्रह्मान्त-रस-लापिनी
स्थायि-सं-चारि-भावादि-लास्य-ताण्डव-नर्त्तिनी
३८५.
भव-निर्वाण-तटिनी सं-सारिण्यभि-सारिणी
सरिन्मध्या यौगपद्योभय-तीर-वि-हारिणी
३८६.
सार्व-भौम-समाधि-स्वारूप्यार्थानु-भाविनी
अ-सं-सारिण्य-साशान्ता-रास-सार-प्र-वाहिणी
३८७.
रति-धा नित्य-वि-रता निरन्तर-रति-प्रिया
निरन्तरा वि-स्खलिता सहस्र-स्खलन-स्थिता
३८८.
काम-सं-यमिनी काम-कोटि-प्रान्त-महेश्वरी
निष्कामा सर्व-जीवात्म-चिच्छक्ति-स्मरणातुरा
३८९.
विश्व-रङ्ग-महा-राज्ञी चित्र-रङ्ग-शत-प्र-था
रागिणी राग-माला-स्था राग-माला-सु-शोभना
३९०.
स्वयं-सङ्गीत-वाद्याद्याविष्कारण-सु-रूपिणी
दृश्य-श्रव्य-समाहार्या रङ्ग-ब्रह्माण्ड-नायिका

३९१. अ-संख्य-कोटि-ब्रह्माण्ड-ज्वाला-चक्र-महा-यन्त्र-
बिन्दु-रङ्गाभ्यन्तरङ्ग-शालैकाकि-वि-नर्तिनी

३९२. अ-संख्य-कोटि-ब्रह्माण्ड-स्कम्भ-वि-स्तम्भित-स्थल-
प्र-वि-शाल-ख-सौक्ष्म्यान्तर्बिन्दु-शाला-वि-हारिणी

३९३. सदा-स्वाद्वी सदाऽऽस्वाद्या सुखाऽऽराध्या सु-मालिनी
मिष्टा तिक्ता कषायाऽम्ला कट्वी लावण्य-सुन्दरी

३९४. स्नोऽस्पृष्टा ऋषि-स्पृष्टा तैतिली स्नेह-वि-स्रवा
अहं-कर्त्री चित्त-कर्त्री बुद्धि-कर्त्री मनो-जनिः

३९५. नित्य-स्निग्धा प्रिय-प्राणा प्रिय-बोधिः प्रियार्थिनी
सर्व-श्रेष्ठा स्वादु-नाम्नी सर्व-प्रेमार्थ-तत्त्विनी

३९६. सत्संगात्मा महा-सत्त्व-सन्मानस-सु-सं-हृतिः
भास्वद्-दीपा भर्ग-माला भर्ग-ज्वाला स्व-गर्भ-गा

३९७. भर्ग-गर्भा सदा-धर्मा गुप्त-ताप-नि-षूदनी
गुहा-प्र-विष्टा गूढार्था स्पर्श-मात्रार्थ-शक्ति-दा

३९८. कोटि-वारिधि-गाम्भीर्या स्व-गाम्भीर्य-प्र-वेशनी
नित्य-गुप्ता नित्य-लुप्ता चात्माविर्भाव-दर्शिनी

३९९. अरि-षड्-वर्ग-मर्दार्था त्रैषणा-त्रय-नाशिनी
षडूर्मि-शमन-व्यस्ता पुरुषार्थ-चतुष्टयी

४००. सप्तोदधि-स्तन्य-पूर्णा हुत-भुक् सु-मनः-स्तनी
ब्रह्म-वीणाऽघोर-पत्नी देव-माध्वी घृत-प्रिया

४०१.
अमृतार्द्र-सु-वासो-धा चार्त-भीति-वि-नाशनी
वैकुण्ठी चैत-वन्धात्म-कुण्ठा-कुण्ठ-प्र-शोषिणी
४०२.
चैत्त-भाव-तनू-बन्ध-व्याधि-रोगान्त-भेषजी
आधि-शातन-पट्वी सा विद्या-क्षुर-निशातनी
४०३.
अविद्या ऽन्ध-तमो-ग्राव-कर्त्तनी क्षुर-धारिका
समाधि-सम्पत्सम्पाद-वार्त्ता-शास्त्र-प्र-बोधिनी
४०४.
स्त्रियां पुरुष-लिङ्गात्मा पुंसु स्त्री-लिङ्ग-रूपिणी
नर-नारी-वि-निर्भेद-भाव-बुद्धि-वि-नाशिनी
४०५. सर्व-घोर-महा-शर्व-बीज-मन्त्रेश्वरेश्वरी
अ-घोरान्त-तपश्चर्या-बीज-वप्त्री स्व-बीज-जा
४०६. अणिष्ठ-मणि-बिन्दून्त र्महोद्यानहृद्य-मञ्जरी-
नाडी-पथ-प्र-भा-देहि-सुन्दरी-कोटि-राधिता
४०७ क्रीडा-व्यग्र-महा-प्र-ज्ञा चोर्ध्व-रेतो-जन-प्रिया
महा-भोग-महा-मोक्ष-यौगपद्य-वर-प्र-दा

॥ श्रीँ ऐँ ह्रीँ क्लीँ क्रीँ श्रीँ ॥

इयं कुण्डलिनी सं समिद्धा प्राणान् मे सिञ्चन्ती सूर्य-त्विषा
मृतस्य सु-चेतसां दुरोणे ऽसम्भूतेर्गोधादद्या मां पर्षत्

नाम्नो वह्नौ नाम हविर्नाम-होत्रे जुहूमसि
घृतं नाम समिन्नाम तस्मै नाम्न इदं नमः



१.
इत्थं सम्प्राप्य वि-ज्ञानं नाम्नां शक्त्याः, गुरोश्चितः
निमेषस्यार्बुदांशेन, पुनरुन्मेषमाययौ

२.
दिक्-काल-नाम-रूपात्मा उन्मेषः पुनरापतत्
तस्य शिष्यान् ज्ञापयिष्णोः, गह्वरेष्ठश्च स स्थितः

३.
गुरोर्भूम्याश्रमे स्थित्वा यावज्जीवं मुदान्वितः
दिक्-काल-विषय-भ्रान्तानभ्रान्तान् संस्करोति सः

४.
मूढान् प्र-सुप्त-वि-ज्ञानान् यांश्च कांश्चित् पृथग्जनान्
सं-चेतयति बोधयर्थे मोहस्य कुहकाद् भृशम्

५.
महा-भोग-महा-मोक्ष-पन्थानं यमदर्शयत्
गुरुस्तं तत्र यात्रार्थं स्व-शिष्यान् प्रेरयत्युत

६.
ये केऽपि तस्य सच्छिष्या भवेयुरधि-कारिणः
प्र-वेशयति तानेव सुषुम्ना-पथि मध्यमे

७.
तेषां कुण्डलिनीं सुप्तां प्र-बोधयति नागिनीम्
चक्षुर्दृष्ट्या मन्त्र-वाचा कर-स्पन्देन वा पुनः

८.
अथवा स्व-गुरुं ध्यात्वा स्व-चित् तेषां चिति क्षिपन्
स दीक्षयति योगात्मा युञ्जानस्तान् गुरोश्चिता

९.
तेजो-बिन्दोर्नाद-बिन्दोः सर्वा आभ्यन्तरीर्गुहाः
प्र-वेशयति तत्रैव स्थापयंस्तच्चिदासनम्

१०.
यावन्मोक्षयते चैनं करुणो भूरिशो जनान्
तावत्यपि च चिन्मात्रमुपास्ते गुरुमात्मनि

११.
समाधि- तन्तुं तनुते योऽयंस्तत् क्षणं न हि
चिद्- गह्वर- समासीन एवैवं कुरुते कृपाः

१२.
एवं चोभय-लोक-स्थः कुण्डलिन्याऽभिजीवितः
सहस्र-वत्सर-वयाः चित्-कैवल्य-पदं ययौ

१३.
एवं यश्चित्-सरिन्मध्ये गाहमानो निरन्तरम्
ध्यायेत् कुण्डलिनी-नामार्थैकं सौषुम्णा-वर्त्मनि

१४.
नामैकं वा स्मरेद् वाऽपि मन्त्रमूहेद् विचक्षणः
"श्रीँ" पूर्वं सम्प्रदाने च 'नम' इत्यन्तमेव च

१५.
अध- ऊर्ध्वं नयेत् प्राज्ञः प्राणं, चक्र- सरांसि च
सन्तरन्,स सम-श्वासो मेरु- नाड्यां हि सं-चरेत्

१६.
स्वस्थोऽरुग्णोऽजीर्ण-कायो यावत् तस्य जिजीविषा
सिद्धिभ्यस्तु सु- सन्यस्तस्समाधौ च दृढ-व्रतः

१७.
स्मित-पूर्वं देह-पातं लब्ध्वा निर्वाणमाप्नुयात्
स्पन्द- बिन्दुं भेदयित्वा तद्-द्वारिसंप्र- विश्य च

१८.
अ- कुञ्चित्-खे स्वात्म-तेजो- निर्मिते कुटजे वसेत्
देह-भारमिमं क्षिप्त्वा स्वच्छन्द-गतिको भवेत्

१९.
दिक्-कालाद्यनवच्छिन्नः स्व-तन्त्र-ज्योतिरुड्डयेत्
सम्यग्- बोधि- पदानन्दे कैवल्योत्तरतां भजेत्

इति श्री- कुण्डलिनी-सहस्राधिक-नाम-स्तोत्र-माहात्म्यम्



महामण्डलेश्वरः स्वामी वेदभारती

हिमालयस्थसिद्धयोगिसम्राजांश्रीस्वामीरामसद्गुरूणां पट्टशिष्यो महामण्डलेश्वरः श्रीस्वामी वेदभारती देहरादून-उपत्यकायां संस्कृत-निष्ठ-परिवारे १९३३ खीस्ताब्दे जनिं लेभे । एकादशवर्षीय एवायं बालो वेद-चतुष्टय्या आध्यात्मिकाधिदैविकाधिभौतिकत्रिविधव्याख्याकुशल इति सुविख्यातः समभवत् ।

एकोनविंशतिवर्षदेशीय एवायमुपदेशप्रसङ्गेन विदेशेषु विचचार । तत आरभ्य अफ्रीका-इंग्लैण्ड्-यूरोप-अमेरिकादिदेशेषूपदिशन् लोकान् धर्मं च परिचरन् नैकसंस्थानानि समस्थापयत् । सर्वमेतदनुतिष्ठन्नपि साम्प्रतिकविश्वविद्यालयशिक्षामर्जयित्वा मिनिसोटाविश्वविद्यालये अमेरिका-देशे प्राध्यापयत् ।

१९६९ खीस्ताब्दे सद्गुरोः श्रीस्वामीरामाद् ध्यानयोग-परम्परा-दीक्षामङ्गीकृतवान् । तदनन्तरं सर्वदेशेष्वाध्यात्मिकध्यान-केन्द्रान् समस्थापयत् । लक्षाधिकजनान् सह स्थितान् ध्यानयोगे स्थापयति । तत्तद्देशेषु च तत्तद्देशनिवासिन एवास्य शिष्यत्वम् अङ्गीकृतवन्तः ।

सम्प्रति साधना-मन्दिराश्रमस्थश्रीगुरुदेवपीठासीनो हिमालयन्-हॉस्पिटल-ट्रस्ट-संस्थानस्याध्यात्मिकनिदेशकत्वेनापि लोकस्य दुःखत्रय-मपाकरोति ।

सहस्राधिकपृष्ठकलेवरा गभीरा पातञ्जलयोगसूत्रस्य प्रथम-द्वितीय-पादव्याख्या एतत्प्रणीता अन्ये चानेके ग्रन्था अमेरिकादेशे प्रकाशिताः सन्ति ।